विशिष्टवस्त्वेकदेशे राश्येकदेशे च प्रसिद्धः। श्रुतौ तु पत्न्यामपि परंपरया, अर्द्धो वा एष आत्मनो यत् पत्नीरिति। स आत्मानमेव द्वेधाऽपातयत् ततः पतिश्च पत्नी चाभवतां तदेतदर्द्धवृगलमिवेति तस्या अर्द्धत्वकथनादर्द्धशब्दस्य च कोशे पुंस्यर्द्धोऽर्द्धं समेऽशक इत्यंशविशेषे शक्तेः पादशब्दोऽप्यवयव एकदेशे च। अवयवे तु प्रसिद्धः। एकदेशे तु विश्वो वैश्वानरः प्रथमः पाद इति। यद्यप्येतेषु यस्य कस्याप्यर्थस्य ग्रहणे लक्षणादोषसंसर्गो न भवति, तथापि श्रुतावूर्णनाभतन्त्वोरग्निविस्फुलिङ्गयोश्च दृष्टान्तकथनात् तदनुकूल एवांशांशिभावो ग्राह्यः। तथा सति खण्डावयवादिरूपस्तन्नित्यत्वादिबाधकश्रुत्यनुरोधादविकृतस्वरूप एवांशः सिद्ध्यति, न नित्याभिन्नः केवलविशेषणरूपो वा। प्रलयदशायामविभागेन पिण्डीभाव ऐक्ये वा श्लिष्टत्वेनैव सत्त्वात् तदालिङ्गितस्य ब्रह्मणः स्वस्मिन्नहमितरभिन्न इति प्रतीतेरर्थसिद्धत्वात् सृष्टिप्राक्काले बहु स्यामित्येकत्वबुद्धिपूर्वकस्य सङ्कल्पस्य पीडाप्रसङ्गात्। तस्या एकत्वबुद्धेर्भ्रमत्वप्रसङ्गेन महोपप्लवप्रसङ्गाच्च। अस्मत्पक्षे तु मोक्षेऽपि चरण एवैक्यम्। चेद्यं च सात्त्वतपतेश्चरणं प्रविष्ट इत्यादिवाक्यात्। अतोऽशांशिभावः स्वामिसेवकभावो, यो यदंशः स तं भजेत्, नाऽरुद्रो रुद्रमर्चयेदित्यादिवाक्यान्यैक्यं चेति सर्वं प्राञ्जलमुपपद्यते। एवं जीवानामंशत्वे जीवस्वरूपविचारेण नानात्मवादो, भगवत्स्वरूपविचारेण चैकात्मवाद इत्यपि प्राञ्जलमेव सिद्ध्यति। हस्तपादादीनां परस्परभेदपुरुषाभेदयोर्लोकेऽपि दर्शनात्। एवञ्च मुक्तौ जीवानां भगवदैक्येऽपि तेषां तत्तदङ्गेष्वेव प्रवशाद्भेदसहिष्णुरेवाभेदः। भगवन्नियम्यता च प्राञ्जलैव। यथा हस्तादीनां तत्तन्नामकत्वं, तद्वज्जीवानामंशानां जीवनामकत्वमात्मनामकत्वं च निर्बाधम्। स्वगतद्वैतं तु न दोषाय। भेदसहिष्णोरेवाभेदस्य सिद्धान्तेऽङ्गीकारात्। अत एव श्रीवसुदेवभगवत्संवादेऽपि, आत्मा ह्येकः स्वयं ज्योतिरिति श्लोके नानात्वदृष्टेरौपाधिकत्वेन भ्रान्तत्वं निरूप्य स्वजीवस्वरूपयोर्विचारेणैकात्म्यं बोधयता भगवता, 'खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम्। आविस्तारोऽल्पभूर्येको नानात्वं यात्यसावपी'ति श्लोके खादिपञ्चमहाभूतदृष्टान्तेनैकात्म्येऽपि नानात्वस्य वास्तवत्वमुपाधिव्यङ्ग्यत्वं च बोधितम्। अन्यथा पूर्वश्लोके एव नानात्वदृष्टे-

वनमालिदासस्तु—तद्भिन्नत्वे सति तत्सदृशत्वमंशत्वम् यथा चन्द्रमण्डलाच्छुतांशो गुरुमण्डल इति भिन्नांशस्वरूपमाह।

तेन प्राचीनमाध्वमते राश्येकदेशत्वमंशत्वं फलति। वनमालिमते तु सादृश्यालपत्वबोधनार्थत्वादौपचारिकमंशत्वं फलति प्रकाशादिवन्नैवं पर इति सूत्रव्याख्याने च, यथा तेजोंऽशयोः कालाग्निखद्योतयोर्जलांशयोरमृतसमुद्रमूत्रयोः पृथिव्यंशयोर्मेरुपुरीषयोस्तत्सदृशत्वाविशेषेऽपि यथा नैकप्रकारता, किन्तु सदसत्तया विवेकस्तथा मत्स्यादीनां स्वरूपांशानां भिन्नांशानां जीवानां च। एवंशतुल्येऽपि कालाग्नितेजसोरभिमानिदेवतैक्यं खद्योते चाभिमानिभेद इति तत्कृतं वैलक्षण्यमित्याहुः।

अत्रेदमवधेयम्। सूत्रे, नैवं पर इत्यनेन यत्प्रकारको जीवस्तत्प्रकारकत्वं परस्मिन्निषिध्यते प्रकाशादिदृष्टान्तेन। भवद्भिस्तु परस्वरूपविचारेण स्वरूपांशानां तथात्वं साध्यते। ननु सिद्धे परस्य तथात्वे अर्थादेव सेत्स्यतीत्यपार्थः प्रयासः। परस्य निर्दोषत्वं तु न भवदुदितरीत्या सिद्ध्यति। तेजोजलभुवां कालाग्न्यमृतसमुद्रमेरूणामेवैकाभिमानित्वं नान्येषामित्येवं विभागस्य पुराणादिष्वदर्शनात् पृथिव्याः सर्वसहात्वेन दोषसम्बन्धस्य सिद्धतया दृष्टान्तस्य विरुद्धत्वप्रसङ्गाच्च। तेषां स्वांशराश्यभिमानित्ववदीश्वरेऽपि जीवराश्यभिमानित्वप्रसङ्गाच्च। अनभिमानित्वं तु भिन्नत्वस्य भवद्भिरेवोपगतत्वादंशत्वस्यैवासम्भवः। अथ राशिवदंशित्वं विभाव्यते तदा तु तस्य साजात्यमात्रे पर्यवसानात् ततो भिन्नस्यैकदेशस्य दूषणं राशौ दूषणसंसर्गस्य लोकेऽप्यभावात् परिहारस्यैव वैयर्थ्यम्। एवं पितृपुत्रभावेऽपि, पुत्रे काणे पितरि तदभावात् परिहारवैयर्थ्यमेव। न च तद्बाधकश्रुत्याद्यनुपपत्तिः। अस्मद्रीत्यापि तदुपपत्तेः। किञ्चैवं नैसर्गिके भेदे अवान्तरसृष्टाविवादिसृष्टावपि पूर्वमीश्वरे जीवानां पिण्डीभाव एव वाच्यो, न त्वैक्यम्। तथा सति तेषां भिन्नत्वेन, बहु स्यां नामरूपे व्याकरवाणीत्याद्युक्तं स्वस्य बहुभवनं नामरूपव्याकर्तृत्वमुत्तमपुरुषप्रयोगश्चोपरुद्ध्येत। अभिमानित्व जीवतौल्यं चापद्येतेति।

प्रकृतमनुसरामः॥ स्मृतौ सूत्रे चांशशब्द उक्तः, श्रुतौ च पादशब्दः। उभावप्यनेकार्थत्वात् सन्दिग्धौ। अंशशब्दस्तावदवयवे पुत्रे खण्डे

गुणोपाधित्वेन भ्रान्तत्वे बोधिते तत एव नानात्वस्य निवृत्तत्वात् खादिपञ्चमहाभूतदृष्टान्तेन नानात्वं न स्थापयेत् । केवलाकाशदृष्टान्तेनापि घटाकाशमहाकाशवदेकत्वस्यौपाधिकनानात्वस्य च सिद्धौ सांशानि भूतानि भूतान्तराणि न दृष्टान्तीकुर्यात् । अतोऽशत्वेन नानात्वस्य विद्यमानत्वात् परापरभावघटित एवैकात्म्यवादो भगवदभिमत इति सिद्ध्यति । तेन परममुक्तिदशायामैक्याभिव्यक्तावपि पुरुषस्य स्वाङ्गेष्विव भगवतो जीवेषु नियम्यता न विरुद्ध्यते ननु परममुक्तेष्वैश्वर्यादिवत्त्वे भिन्नं नियम्यतया किं वा कार्यमिति शङ्क्यम् । स्वस्य मुक्तोपसृप्यत्वात् स्वसेवास्वप्राकट्येच्छायां स्वसेवार्थं स्वेन सह तत्प्राकट्यमित्यादि बोध्यम् । नचैवं सति नानात्वनिन्दाबोधकश्रुतिविरोधः शङ्क्यः । तत्र हि प्राणस्य प्राणमुत चक्षुषश्चक्षुरित्युपक्रम्य सर्वाधिदैविकत्वं वदन्, नेह नानास्ति किञ्चनेति स्वरूपं नानात्वं निषेधति । तेन यथा जीवे प्राणादयो भिन्नाः स्वयं जीवस्तेभ्यो भिन्न इत्येवं नानात्वं, न तथा ब्रह्मणि, किन्तु सर्वाधिदैविकत्वात्, प्राणस्यैव प्राणो भवतीत्यादिश्रुत्युक्तं प्राणादिकार्यं स्वयं स्वरूपेणैव कुर्वन्नाना नेति नानात्वं निषिद्ध्य तादृशे यः प्राणादिनानात्वं पश्यति तस्य निन्दा क्रियते । तेन भ्रान्तप्रतिपन्ननानात्वस्य दर्शन एव निन्दापर्यवसानं, न तु कार्यभेदेन प्राप्ते तस्मिन् प्राणस्यैव प्राणो भवतीति श्रुत्यैव नानात्वस्याङ्गीकारात् । यथैकः पुरुषो पाचनपाठनादीनि नानाकार्याणि कुर्वन्नाना न भवतीति तद्वद् ब्रह्मापीत्यदोषात् । एतेनैव, न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदिवेत्युत्तरतापनीयोक्तं समर्थितं ज्ञेयम् । अत्रांशांशिभावेनैव नानाकार्यकरणेऽपि स्वरूपैक्यानपायात् । इदं च मत्कृतनृसिंहतापनीव्याख्यानादेवावगन्तव्यमिति नेह प्रपञ्च्यते । नच, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवतीति श्रुतिविरोधः । अत्र भेददर्शने दोषस्यानुक्तत्वात्, कुरुते इति पदेन तथा निश्चयात् । क्रियासाध्यस्य तस्य भेदस्योपमानादिकरणं एव सम्भवात् । तस्मादयमेव पक्षो निर्दुष्ट इति ॥ ५३ ॥ १६ ॥

इति श्रीमद्वल्लभाचार्यचरणनखचन्द्रनिरस्तहृदयध्वान्तस्य
पुरुषोत्तमस्य कृतौ भाष्यप्रकाशे द्वितीयाध्यायस्य
तृतीयः पादः ॥ २ ॥ ३ ॥